वाणीं भजत गैर्वाणीम् !

# गैर्वाणी

## मासिकी पत्रिका


संपुटः १४ | OCTOBER 1976 | क्रमांकः १०


नळ आश्वयुजांकः | शकाब्दाः १८९८ | मूल्यम् ०–५० पैसाः

# विषयसूचिका

★

# मातंगीस्तवः

— ति. गो. अनन्तसुब्रह्मण्यम्,
शिरोमणिः, सङ्गीतभूषणम्, तिरुपति

रागः – गौलः
तालः – आदिः

पल्लवि

मातंगीं स्मरामि सततम् ।
महादेवार्धगौळांगीं राज – ॥

अ-मल्लवि

मातंगमुखजननीं मत्त–
मातंगारि पञ्चास्य वाहिनीम् ॥ ॥ मातंगीम् ॥

चरणम्

मातंगमुनिकन्यकाभरणां,
मातंगरक्षकमाधवसहजाम् ।
मातंगजघनमरालगमनां
माणिक्यवीणाकरमणिवलयाम् ॥ ॥ मातंगीम् ॥

# धन्या भारतीयाः

भारतभूमिभाजः सर्वेऽपि वयं धन्य-धन्याः आ बहोः कालात् । पुराणरत्नमिति प्रथिते विष्णु-पुराणे श्रीमद्भागवते च देवगान-पुरस्सरं भारतीयानां प्रशस्ति रुद्घुष्यते ।

"गायन्ति देवाः किल गीतकानि,
धन्यास्तु ते भारतभूमिभागे ।
स्वर्गापवर्गास्पदमार्गभूते,
भवन्ति भूयः पुरुषाः सुरत्वात् ॥"

"अहो! अमीषां किमकारि शोभनं?
प्रसन्न एषां स्विदुत स्वयं हरिः ।
यैर्जन्म लब्धं नृषु भारताजिरे ।
मुकुन्दसेवौपयिकं स्पृहा हि नः ॥"

इति पुराणकालादारभ्य भारत भूमिप्रशस्ति रेव मुपगीयते । देवाना मपि हि इयं भूमिः स्पृहणीयाऽसीत्! तत्र कारण-द्वयमस्ति । भारतभूमिः कर्म-भूमिरिति प्रथते स्म । कर्मानु-ष्ठानयोग्यतायाः कर्मसाद्-गुण्यस्य कर्मणः शीघ्रफलेग्रहि त्वस्य च कृते आ कृतयुगात् भूमिरियं प्रशस्ता ऋषिपरम्परा-याम् । पुण्यकर्मानुष्ठानेन स्वर्गं प्राप्ताः जीवाः देवा इति व्यव-ह्रियन्ते तेऽपि "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इति रीत्या भूमण्डलं प्राप्नुवन्त्येव । स्वर्गे वा अपवर्गे वा यदि पुनर्धी स्तेषां तर्हि ते भारतभूमावेव जन्म वाञ्छन्ति; यतः इयं भारत-भूमिः स्वर्गापवर्गास्पदमार्गभूता ।

कर्मणः सत्वरसाफल्याय क्षेत्र माहात्म्य मनिवार्यम्। यथा पारिश्रामिकाः स्वस्व परिश्रम स्थापनोपयोगि - मूलद्रव्य - समृद्धे स्थलविशेष एव कर्मागाराणि स्थापयन्ति उत्पादितानां च वस्तूनां विक्रय - निर्यातादि - विपणि सौकर्याय आनुकूल्यं सम्पादयन्ति, तथैव स्वर्गापवर्ग - साधका अपि स्वप्रयोजनानुकूलं स्थलविशेष मभिलषन्ति। देवाः भूयो भूयो भारते जन्म वाञ्छन्ति, यतः सर्वदेवात्मको भगवान् श्रीमन्नारायणो हरिः स्वयंभारतभूमिभाजां पुण्यलेशेनैव प्रसन्नो भवति।

येषां भारतीयानां जन्म धन्यमिति प्रस्तुतं, येषां च कृते स्वयं हरिः प्रसन्नो भवतीत्युक्तं, ते तादृशाः सर्वे वयं हरिप्रिया एव भवामः। भारतजनकेन गांधिमहोदयेन कतिचन निम्नवर्गीया हरिजना इति व्यवहृताः। तेषु तस्य महात्मनः सञ्जाता अनुकम्पैव तथा तद्व्यवहारस्य कारण मासीत्। किञ्च देशीयपरिस्थिति समीकरणाय सांघिकसंस्करणाय च तेन महात्मना निम्नवर्गस्य हरिजन नामकरण पुरस्सरं तदुद्धारोद्यमः आस्थितः। विद्याविनयसम्पन्नाः शौचाचार समायुक्ताः ब्राह्मणा यदि भवन्ति, देशरक्षण - राज्यपालनसक्ताः शौर्य धैर्यौ दार्यादिगुणोपेता राजन्या यदि भवन्ति, व्यापारनिरताः महदैश्वर्यसम्पन्ना यदि वणिजो भवन्ति, अवशिष्टास्सर्वे सेवापरायणा यदि भवन्ति तर्हि सर्वेऽपि स्वस्व वर्णधर्मानुसारेण सुखिन एव भवन्ति इति पुरातनी पुराणभारतव्यवस्था। अधुना तु भारते "वर्णधर्म" इति शब्दे वर्णः उपेक्ष्यते। धर्मस्तु अपेक्ष्यते। यो वा को वा पुरुषः, या वा का वा स्त्री स्वतन्त्रभारते स्वतन्त्रभावैः साकं जीवनविधानं स्वीकर्तुं शक्नोति। भारतीयसंविधानं, तत्र च कालोचित मानुकूल्यं

सम्पादयन्ती भारतीयसंसच्चे त्युभयं समेषां भारतीयानां कुल-मत-निरपेक्षं अभयप्रदाने समर्थं मन्ति। अस्यां अवस्थायां भारतीयजनसंघे सर्वेऽपि वर्गाः (पुरा - वर्णाः) निराटङ्कं स्वस्वधर्मानुसारेण सुखशान्ति-युतं जीवितं यापयितुं यदि प्रयतेरन् तर्हि "सर्वे जनाः सुखिनो भवन्तु" इत्ययं महा-नाशय सिध्येदेव।

स्वातन्त्र्योद्यमकाले महात्मा-गान्धिः सत्याहिंसे, हिन्दुमुस्लिम-सख्यं, हरिजनोद्धारोद्यमः इत्या-दीनां बहूनां देशनिर्माणकार्याणां आचरणं स्वीचकार। सत्या-हिंसाभ्यां स्वातन्त्र्यं तावत्सिद्धं, किन्तु हिन्दुमुस्लिमसख्यं तु विफल मासीत्, परिणामतः भारत भूभागो द्विधाकृतः। एवं हरि जनोद्यमे प्रवृत्तेऽपि अम्बेड्-करमहाशयेन तत्प्रतिकूला सरणि रादृता। गान्धिमहोदयः सर्व-स्याऽपि जगतः महात्मा सन्नपि अनयोः जिन्ना - अम्बेड्कर-महाशययोः पुरतः विफलमनोरथ एव आसीत्। भिन्नं भारतं; वर्गद्वेषश्च जनतायां प्रवृद्धः। महामनाः मानवतावादी महात्मा गान्धिः विदेशीयानां, विधर्मिणां बहिष्कृतसवर्णहिन्दूनां च विषये समदृष्टि रासीत्। सना-तनानेव धर्मान् आधुनिकविधा-नेन सर्वमानवोज्जीवनाय स प्रबोधयामास। स राजकीय-वादी धर्मावलम्बी आर्थिकपुन-र्निर्माता, संघसंस्कर्ता चेति निश्चप्रचम्।

अस्मिन्नाश्विने मासे प्रवृत्तां गान्धीजयन्तीं पुरस्कृत्य सर्वेऽपि भारतीयाः पितृपैतामहं स्वधर्मं अविस्मृत्य देशे देवे च भक्तिं द्रढयन्तः नित्यकर्मानुष्ठानपरा यदि भवेयु स्तर्हि न केवलं गान्धिमहोदयस्य आत्मा अपितु परमात्मा हरिरेव स्वयं प्रसन्नो-भवेत्। स्वस्वधर्मानुष्ठानेन हि न केवलं हरिजनाख्या निम्न-वर्गीया जनाः अपितु सर्वे जनाः भारतभूमिभाजः हरिप्रिया

भवेयुः। मानवसेवैव माधवसेवेति यथाभिधीयते तथा माधवसेवाऽपि मानवसेवैवाऽवश्यं भवेत्। अस्मिन्नेव मासे दीपावलीमहोत्सवेन तिमिरोन्मूलन मपि भविष्यति। दीपेनान्धकारस्येव ज्ञानप्रदीपेन अज्ञानान्धकारस्य निर्मूलनं, तद्द्वारा दारिद्र्योन्मूलनं च भवतु। सर्वे जनाः शौचाचार सम्पन्नाः स्वधर्मनिरताः हरिप्रियाश्च भूयासुरिति, एवं च भारतमपि अधुना पुरा यथा, धन्यजीविभि स्समुज्ज्वलं भूयादिति चाशास्यते।

## अंगारकग्रहे अमेरिकीय व्योमनौकावतरणम्

— "अवरः"

**वैंकिंग् प्रथमं ग्रहान्तरयानम् —**

अमेरिकादेशे कालिफोर्नियानगरे "पेसडीना" प्रदेशात् एकादश मासेभ्यः प्राक् सूदूर - ग्रहान्तरयानेतिहासे सुवर्णाध्यायप्रारम्भ मातन्वती अमेरिकीय व्योमनौका वैंकिंग् –। भूमण्डलात्प्रस्थिता २०-७-१९७६ दिनांके अङ्गारकग्रहे अवतीर्णा।

१३७ कोटिरूप्यक व्ययेन निर्मित - प्रथम - वैंकिंग् - व्योमनौका महादभुतोपेतं विजयं साधयामास। अस्य महाविजयस्य कीर्तिप्रतिष्ठा भाजनं अमेरिका शास्त्रविदः सार्वदेशिकप्रपञ्चाभिनन्दनं अर्हन्ति।

**अवतरणम् —**

भूमे र्निकटवर्तिनि परिमाणे स्वल्पे शीतले अङ्गारकग्रहे वैंकिग्–। नाम ग्रहान्तरयान - व्योमनौका अवतीर्णा। अङ्गा-

रकग्रहः भूमेः (३४) चतुस्त्रिंशत् कोटि कि. मी. दूरे वर्तते। व्योमनौका तत्समीपगमनानन्तरं तत्परितः परिभ्रमन्ती तदुपरितले स्वावतरणोपयुक्तं स्थलं सावधानं निर्णिनाय। (८०) अशीतिकोटि कि. मी दूरपर्यन्तं समूढस्य अवतरणविभागस्य जूलैमासे (२०) विंशतितमे दिनाङ्के मध्याह्ने मातृनौकातः विच्छेदः सञ्जातः! मातृनौकायाः भारः २२५० किलोग्रामाः, अवतरणनौकयास्तु ६०० किलोग्रामाः।

**अवतरणनौका —**

अङ्गारकग्रहोपरितलेऽवतीर्णे रोदसी - मन्दसे सर्वाङ्गसम्पूर्णा प्रयोगशालाऽन्तः पिहिताऽस्ति। अमहत्काराकारस्य अस्य रोदसीमन्दसस्य भूमौ तु भारः ६०० किलोग्रामाः; अङ्गारकग्रहे पुनः २२८ किलोग्रामो भवति। अस्य त्रयः पादाः, एकः सुदीर्घो हस्तश्च सन्ति। वस्तुतस्तु इदं स्वयंचोदकं एकं परिशोधनागारं भवति। अङ्गारकग्रहे परिसरप्रान्तस्य तत्रत्य विविधवस्तुजातस्य च छायाचित्राणि परिकल्प्य, अङ्गारकमृत्तिका मादाय तत्र जीवपदार्थस्य सत्त्वं परिशोध्य च, अङ्गारकग्रहं परितः परिभ्रममाणायां वैकिग् - मातृ - नौकायां विद्यमान स्वयंचोदक यन्त्रान् प्रति समाचारजातं संवत्सरपर्यन्तं अङ्गारकग्रहोपरितले स्थित्वा प्रेषयिष्यति।

पूर्वं चन्द्रमसि मानवावतरणसमयेऽपि अपोलो नौकायाः मातृनौका चन्द्रं परितः परिभ्रमति स्म; अवतरणनौका चन्द्रोपरितलेऽवतीर्य छायाचित्राणां समाचरस्य च प्रेषणे, तत्रत्य मृत्तिका - शिलादिवस्तुजातानयने चोपयुक्तेति स्मर्तव्यम्। तद्वदेव इदानीमपि वैकिग् - प्रथमस्य मातृनौका अंगारकं परितः परिभ्रमति,

अवतरण नौका च अंगारकग्रहोपरितलेऽवतीर्य ततः छायाचित्र-प्रेषणं, परिशोधनाफलितप्रकटनं च मातृनौकायां विद्यमान यन्त्र-सामग्रीं प्रति करोति। इयांस्तु विशेषः, पूर्वं सोमगामि - व्योमयाने उभयत्र मातृनौकायां अवतरण नौकायां च मानवा आसन्। इदानीन्तु न तथा; स्वयंचोदकयन्त्रजाल मेव मानवा-चरणीयं कार्यजातं समस्तं कर्तुं पारयति इति।

**अंगारकग्रहे सायंकालः —**

वैकिंग् प्रथमस्य अवतरणनौका अंगारकोपरितले अवतर-णात् प्राक् - निमेषद्वयपूर्वं - उष्णोग्रता - संरक्षककवचं व्यमुञ्चत्, अंगारकग्रहोपरितलाभिमुखं "राडार्" यन्त्रं भ्रामयति स्म। अवतरणानुकूलं गेर्-चलनं स्थापयामास; बृहदाकारं पेराचूट्-पतत्रं अंगारकवातावरणे व्यसृजत। सावधानं यथा तथा पर्वतानां बिलानां च मध्ये धूलिधूसरिते मृदुनि समतले प्रदेशे पतनानुकूलं स्वकाय परिवर्त्य उद्दिष्टसमयस्य १७ सेकंड्-मात्रविलम्बेन अंगारको-परितले स्वीयं पादत्रयं न्यधात्। तदानीं तत्र-सायङ्काले ४ घण्टाः आसन्। अस्माकं भारतदेशे पुनः तत्समानः कालः – ५ घण्टाः, २३ निमेषाः। तस्मिन् सायन्तनातपे वैकिंग् प्रथमस्य – अवतरण - नौका स्वकीयां छायां व्यलोकयत्। सायन्तन मन्दानिलस्पर्श-मनुभवति स्म। तदानीं अमेरिकायां कालिफोर्नियानगरे पूर्व-प्रभातसमयस्य ४ घण्टाः ५३ निमिषाश्चाऽसन्।

**साक्षाद्भूतलं प्रति सन्देशाः नागच्छन्ति किम्?**

केमेरा – छायाग्राहिणी चक्षुरुन्मील्य परितः पश्यति स्म। राडार् - श्रोत्रपुटं उन्मुखमासीत्। सप्ताहमिते काले स्वकीयं दशपद-मितं हस्तं प्रसार्य अंगारकमृत्तिकाग्रहणं कर्तव्यं खलु!

तदनुगुणं अस्ति न वा इति परिशील्य अवतरण समनन्तरमेव ४० निमेषकाले मातृनौकाद्वारा छायाचित्रद्वयं प्रेषयामास ।

मातृनौका अंगारकदिने एकवारं तत्परिभ्रमणं कुर्वन्ती तत्रत्यसमाचारजातं दृश्यजातं समस्तं सन्देशरूपेण छायाचित्ररूपेण च भूतलगत स्वकेन्द्रस्थानं प्रति प्रेषयन्त्यस्ति । कान्तिवेगेन आगच्छत्सन्देशचित्राणि १९ निमेषानन्तरमेव भूतल - केन्द्रं प्राप्नुवन्ति । इतःपूर्वं चन्द्रलोकात्तावत् २, २½ सेकण्ड् परिमित-कालेनैव सन्देश - चित्राणि भूतलं प्राप्तानि । अनेन उपग्रह - गमनापेक्षया ग्रहान्तर - गमनं महत्तरकार्यमिति सम्भाव्यते ।

**अंगारकतले प्रदेशः —**

वैंकिग् प्रथमस्य अवतरणनौका नैऋतिदिग्भागे अवतरति स्म । अत एव साक्षाद्भूतलं प्रति सन्देश-चित्र-प्रेषणं सुकरं नाऽसीत्, मातृनौकाद्वारैव तत्प्रेषणं सुकरमासीत् । अंगारक - ग्रहात् साक्षात् भूतलं प्रति "क्रयिसी" नामकावतरणप्रान्ता त्पुनः दर्शनसमनन्तरमेव वर्णचित्राणां प्रेषणं कर्तुं शक्नुयात् । तत्र रात्रिषु छायाचित्रग्रहणं न सम्भवति, अत एव तत्प्रसारणमपि नाऽस्ति । तत्कारणं तु – अवतरणशकटे "सेर्चिलैट्" (गवेषणा-प्रदीप) स्थापनं बहुमूल्यमिति भिया न कृतम् ।

**वैंकिग् - द्वितीयं पथि प्रयाति —**

वैंकिग् व्योमयानं अन्यत्किञ्चित् सेप्टंबर् ४ तमे दिनाङ्के अंगारकोपरितलेऽवतरिष्यति । तदनन्तरमेव प्रायश भविष्य-द्रोदसीयानकार्यक्रमे निर्दिष्टस्वरूपनिष्पत्ति र्भविष्यत्ति; अंगारक। ग्रहवासि - जीवराशि - स्वरूप - स्वभावानां परिज्ञानं संभविष्यति -

[ अनुवर्तते ]

# सभावार्ता:

मद्रपुरी,
२८-८-'७६.

चित्तूरु संस्कृतभाषाप्रचारिण्या: सभाया: मद्रास् - अनुबन्ध-सभाकार्यनिर्वाहकवर्गस्य निर्वाचनं २८—८—७६ स्थिरवासरे माम्बलं श्रीशारदामाध्यमिकपाठशालाभवने संवृत्तमासीत्। अधोनिर्दिष्टा: पोषकतया कार्यनिर्वाहकतया च निर्वाचिता: ।

पोषकौ – श्री सि. आर्. पट्टाभिरामन्, बार् - अट्ला.
श्री वि. पट्टाभिरामन्, न्यायवादी

अध्यक्ष: – श्री यन्. कृष्णस्वामिरेड्डि:, (भूतपूर्वमद्रोन्नतन्यायाधिप:)

उपाध्यक्ष:-श्री ए. षण्मुखमुदलियार्, यं. ए.
श्री यस्. यन् श्रीरामदेशिकन्, शिरोमणि:

कार्यदर्शी–श्री की. श्रीनिवासाचार्य:, शिरोमणि:,
(परीक्षामन्त्री, सं. भा. प्र. सभा, चित्तूरु)

सहायकार्यदर्शी – श्री सोम्रा श्रीनिवासन्
कोशाधिकारी – श्री यस्. जम्बुनाथन्, बि. ए.

अन्ये सभ्या:

श्री ओ. आर्. राजगोपालन्, शिरोमणि:
डाक्टर् के. राजगोपालन्
श्रीमती सीतापद्मनाभन्, यं. ए.
श्रीमती गोमती
श्री के. श्रीनिवासन्

की. श्रीनिवासाचार्य:,
कार्यदर्शी।

# पाठशाला प्रारम्भोत्सवः

१९-८-१९७६ दिने सायं भूतपूर्वबीहार्राज्यपालैः अस्मत्सभाया गौरवाध्यक्षैः श्रीमद्भिः यं. अनन्तशयनमय्यङ्गार्यैः ताम्बरं शानिटोरियं ४, मीनाक्षीवीथ्यां संस्कृतपाठशालायाः प्रारम्भोत्सवोऽकारि। श्री यस्. यन्. श्रीरामदेशिकन् महाशयः आध्यक्षमवहत्। संस्कृतस्यावश्यपठनीयतामुद्दिश्य प्रारम्भकाः, अध्यक्षाः, तथा श्री पद्मनाभन् ऐ. ए. यम्. श्री. वि. यस्. वेङ्कटराघवाचार्याश्च उपन्यास्थन्। एतत्सभापरीक्षामन्त्रिणा सेयं पाठशाला मद्रपुर्यनुबन्धसभाङ्गतया प्रचाल्यते।

## अन्ये पाठशाले

मद्रपुर्यनुबन्धसभाङ्गतया तत्कार्यवर्गान्तर्गतया श्रीमत्या सीतपद्मनाभार्यया अडयार् ऐ. ऐ. टिः स्थाने, तथा माम्बलः 'वुमन्स् गिल्ड्'नाम्नि प्रदेशे च पाठशाले प्रचाल्येते।

अत्र सर्वत्र चित्तूरु संस्कृतसभा परीक्षापाठ्यक्रम एव बोध्यत इति ज्ञेयम्।

अनयैव रीत्या मद्रनगरे प्रतिविभागं पाठशालाः प्रचालनीया इति कार्यवर्गेण निरणायि।

**की. श्रीनिवासाचार्यः,**
कार्यदर्शी।

# देववाक्सेतुबन्धनम्

ज. शेषाद्रि अय्यंगार्यः,
न्यायाध्यापकः, S. V. प्राच्यकलाशाला, तिरुपति।

श्रीरामायणकथायां श्रूयते यत् श्रीरामचन्द्रः लङ्कां प्रवित्सुः महोदधौ नलनीलाभ्यां शिल्पिवराभ्यां वानरयूथाहृतैः शिलाकाष्ठखण्डैः दिव्यं सेतुं अबध्नात्, यं दृष्ट्वा पुमांसः प्रकृष्टबहुपातकप्रहाणेन दुःखजलधिमद्युनाऽपि सन्तितीर्षन्ति। किन्तु तेन सेतुनैव वयमधुना लङ्काराज्यं प्राप्तुं न शक्नुमः। तथापि अन्येन सेतुना देवभाषासाम्राज्यमेव साधयामो वयम्। स तु सेतुः एकेन रामचन्द्रेण निर्मितः। महर्षिभिर्बद्धः संस्कृतनामा अयं सेतुः सर्वमपि वाङ्मयसागरं सुखेन तारयतीति अस्य वैशिष्टयमस्ति। इदं केवलं वाचोयुक्तिमात्रं न मन्तव्यम्। केरळ महाराष्ट्रयोः विद्यास्थानयुगळीकुलपतिभ्यां पुनर्नवीकृतश्चायं सेतुः उभयदेशस्थयोर्मध्यमध्यास्ते।

लोके एकस्मात्कूलात् कूलान्तरं प्रापयितुं व्यवधायकप्रवाहोपरि मध्यदेशे इष्टका - काष्ठ - लोहदण्डादिद्रव्यैः निबध्यमानो मार्गविशेष एव सेतुरिति व्यवह्रियते। केरळमहाराष्ट्रयोर्मध्ये कर्नाटकराष्ट्रेन सत्यपि व्यवधाने उभाभ्यां विद्यापीठाभ्यां संस्कृतभाषाप्रचाराख्येन सेतुना मिथो दृढतरः संनिकर्षः परिकल्पित इव समीपकालिकवृत्तान्तेन नः प्रतिभाति।

केरळेषु त्रिचूरमण्डलान्तर्गते इरयनल्लूरपुरे विराजमान भारतीविद्यापीठाख्यसंस्कृतसंस्थानस्य अध्यक्षाः श्रीयुत ई. वी.

भारतपिषरोडी नामभाजः सुजनाः महाराष्ट्रीय मुम्बापुरीस्थ मुम्बादेवी संस्कृतमहाविद्याऽऽलयाध्यक्षैः आमन्त्रिताः ऐषमे सेप्टम्बरमासस्य विंशे दिने संघटितायां संस्कृतविद्वत्परिषदि अमूल्यविषयमुपन्यस्य इमामुत्प्रेक्षामुदस्थापयन् । तस्यां सभायां तन्महाविद्यालयाऽध्यक्षाः श्रीयुताः बी. बी. पुरोहिताह्वयाः विद्वांसः अध्याक्षस्थानं भूषयन्तः मुख्यातिथिभ्यः वाङ्मयमातिथ्यं सश्रद्ध-मकार्षुः । तत्स्वीकृत्य सामोदं तत्प्रतीकर्तव्यतात्वेन स्वकीयमनर्घ-मुपन्यासं संस्कृतप्रेमिणां मनोहरमकार्षुः । वार्तापत्रिकासु तं दृष्ट्-वाऽयं जनः तस्य सारांशमावेदयितुं इत्थमीहते ।

श्रीमन्तः पिषरोडीमहाशयाः इत्थं अब्रवन् । लोके काचन अपप्रथा वरीवर्तते — यत् संस्कृतं नाम अत्यल्पसंख्याकानां पण्डितानामेव उपयोगकरी संकुचितक्षेत्रविहारिणी भाषा-भवतीति । अस्याश्च अन्तरा भारतीयानां दौर्भाग्यं अन्यन्मूलं न मे प्रतिभाति । यतः वस्तुस्थितिः न तथा । विचारशास्त्रेषु, वाक्यार्थसभासु च पण्डितवरैः उपयुज्यमाना भाषा कामं तादृशी भवतु कदाचित, तथापि अधुना भण्डारकर - के. एल्. व्यासराय-शास्त्रि - सी. डी. देशमुख प्रभृतिभिर्विद्वद्वरेण्यैः निर्मितया सुगमया सरलया अधीयमानं संस्कृतं प्रतिभारतपौरस्य सुलभसंपाद्यैवेति निश्चप्रचमहं मन्ये ।

लोके संस्कृतस्य तुल्यतया सुवर्णमेव दर्शयितुं शक्यते । यद्यपि सुवर्णं अतिमूल्यमिति दरिद्राणां दुर्लभमेव । तथापि तत्र सर्वेषां मोहः परं न दूरीभवति । निन्दन्त एव सुवर्णमूल्यस्य आधिक्यं तत्सम्पादनायैव प्रयासमनुभवन्ति बहुविधम् । यतः सुवर्णेन यथा सूक्ष्माः सुमनोहराश्च शृङ्खलाः निर्मीयन्ते तथा नान्यैः लोहैः ।

इत्थमेव साक्षात्संस्कृताऽध्ययनलेखनभाषणादिकं मन्दमतिभिः दुरासदम् । अपितु भारतीयभाषान्तराणां प्रमाणपरिरक्षणे अनन्यसाधारणः प्रभावः संस्कृते विद्यत एव । संस्कृत-कवितासु चमत्कारविशेषश्च अनन्यसाधारणः स्वानुभूतिविषयः समेषाम् ।

केचिन्मन्येरन् यथा आंग्लादिपाश्चात्यभाषाः द्राविडादि प्राच्यभाषाश्च यादृशीं जीविकाऽवसरतां वहन्ति तादृशी संस्कृतस्य नैव भारतदेशेऽवसरता विद्यते इति । अत्र अवसरतेति पदेन आवश्यकता गृह्यते आन्ध्रभाषा प्रौढया । वस्तुतस्तु तावतैव संस्कृतभाषायाः निरुपयोगिता नैव साधयितुं पार्यते । हिन्दू-धर्मस्य विशिष्टतां, भारतीय सुसंस्कृतप्राचीनतमजीविकासौन्दर्यं, प्राच्यानां ऋषीणां विद्यागुरूणां च ग्रन्थरत्नानि च समधिगन्तुं प्रति भारतपौर मधिकारः विद्यत इति कथनमात्रं न समञ्जसम् । किन्तु अधिकारस्य सप्रयोजनं प्रयोगः संस्कृतभाषापरिचयं सम्पाद्य कार्यः इत्येव सम्यक् । अत्र च अन्यासां भाषाणां नैव प्रामुख्य-मस्ति । एकं संस्कृत मपेक्ष्य ।

अतश्च यथा संक्षिप्तसरळरूपेण सर्वेषु विद्यास्थानेषु प्रधान-पाठ्यांशतया संस्कृतं स्वीकर्तव्यमिति प्रभुता निर्बद्धव्या अस्मा-दृशैः । यदि तथा न स्वीकृतं संस्कृतं त्रिभाषाऽध्ययननियमादि प्रतिबन्धकैः तर्हि वयं सर्वे संस्कृतस्म तावदवधि सुदूरवर्तिनः एवेति अहं मन्ये ।

दैनन्दिनचर्यासु संस्कृतं अनुपयुज्यमानं भवतु, तावतैव तस्याः "मृतभाषेति" अभिधानं वयं निधातुं श्रोतुं वा न उत्सहामहे। यतो हि दैनन्दिनकार्येषु प्रयुज्यमानपण्यवीथीभाषाभिः साकं

अतिप्राचीनग्रांथिकदेशभाषाणां संबन्धः सुदूर इति हेतोः ताः द्राविडादिभाषाः मृतभाषात्वेन परिगण्यन्ते ।

इदमपि सर्वेषां निवेदयितुमिच्छामि यत् वाल्मीकिव्यास-प्रभृतिमहर्षिग्रन्थेषु भाषायां सवजनसुगमं सारळ्यं दृश्यते । तेन तेषां काले संस्कृतं सर्वसाधारणमानवस्यापि सजीवतया आकर्ष-णीयतया सुलभावगाहतया च अवर्ततेति ।

किन्तु भाषाप्रमाणपरिरक्षिषया अव्यवस्थादूरस्थितिसंपाद-यितुकामनया च पाणिनिकात्यापनपतञ्जलिप्रमुखैः वैयाकरणै र्महर्षिभिः सूत्रभाष्यादिरचनया काचन परिधिः परिकल्पिता वर्तते । अतो मध्यकाले तस्याः भाषायाः अध्ययने काठिन्यं किञ्चिदिव संवृत्तमिति स्वीकर्तव्यमेव ।

किन्तु १९५९ तमे ईसवीयाब्दे लब्धप्रतिष्ठं भारतीय-विद्यापीठमिदं संस्कृतस्य सरळां काञ्चनशैलीं संपाद्य संश्रित-जनकामधेनुमिव समभिवर्धयत्यधुना। यतः भारतदेशस्य विभिन्न प्रदेशगताः द्विशताधिकैकसहस्रं विद्यार्थिनः लब्धस्वस्वयोग्यता-पत्राः प्रचकासतीति । श्रीपिषरोडीमहाशयाः स्वभाषणान्ते प्राचीकटन् । ते च स्वकरकमलाभ्यां मुम्बादेवीसंस्कृतमहाविद्या-लयच्छात्राणां षष्टिसंख्यकानां कृते अध्ययनयोग्यतापत्राणि व्यतीतरन् च । एतदेव केरळदेशस्य महाराष्ट्रस्य च मध्ये प्रबद्धो वाङ्मयसेतुः संस्कृतजिज्ञासुच्छात्रान् परस्परं संबध्नातीति श्रुत्वा अस्मादृशाः प्रमोदामहे ।

---

# महात्माष्टकम्

के. वि. वेङ्कटेश्वरराय:, विशाखपत्तनम

गान्धि महात्मा जयति,
वीरदीक्षासमन्वितः ।
प्राणभीति र्न यस्यास्ति,
नेता दाता स एव हि ॥ १

शान्तिकामं दयामूर्ति,
दास्यबन्धनिवारकम् ।
नमामि गर्वरहितं,
समानत्वविभूषितम् ॥ २

गान्धिना तेन वीरेण,
शान्तिदान्तिप्रदायिना ।
सत्यधर्मविधात्रा हि,
देशो दास्याद्विमोचितः ॥ ३

नित्यस्मिताय महते,
परदास्य विभेदिने ।
सूत्रयज्ञस्थापकाय,
नमो गान्धिमहात्मने ॥ ४

निराडम्बरवेषाच्च,
ब्रह्मतेजोविराजितात् ।
न जाने नायकं कंचित्,
सर्वोदयप्रवर्तने ॥ ५

स्वदेशे परदेशे च,
खण्डखण्डान्तरेषु च ।
यो महात्मेति विख्यातः,
तस्य नीतिरनुत्तमा ॥ ६

महात्मनि महोदारे,
कस्तूरीप्राणवल्लभे ।
धीयुक्ते राष्ट्रपितरि,
भूयान्मे सततं मतिः ॥ ७

शान्तमूर्ते नमस्तुभ्यं,
सर्वमङ्गलकारण ।
जातीयोद्यमनेत हें,
दयामानुषविग्रह ॥ ८

# भोजसभा

— कंदाळ वेङ्कटरामकृष्णमाचार्यः, तिरुपति

## द्वितीयोऽङ्कः

(नव महाकवयः स्वस्वस्थानेषु उपविष्टाः । भोजः बुद्धिसागरश्च उपविष्टो । बुद्धिसागरः उत्थाय)

बुद्धिः-सभायै नमः । भोः भोः! जन्मदिनोत्सवायाहूताः सकलदेशाधीश्वराः वेदवेदान्तनिष्णाताः कविपण्डितप्रकाण्डाः! सकलकळाकुशला नागरिकाश्च! सुविदितमेवेतत् अद्य श्रीमतां जन्मदिनोत्सवं पुरस्कृत्य एषा सभा सञ्चाल्यते इति । समागताश्च महान्तः नवमहाकवयः । अथ सभा प्रारभ्यते । अस्या स्सभायाश्च निखिलधराधीशाः धाराधीशाः भोजमहाराजा अध्यक्षा भवेयुः । (इति भोजस्यकण्ठे पुष्पमालिकां ददाति)

भोजः- (कार्यक्रमपत्रिकां दृष्ट्वा) प्रार्थना! महाकवयः काळिदासाः प्राथनां कुर्युः । (सर्वे उत्तिष्ठन्ति)

काळिः-जय जननि! परमपावनि!! (इति प्रार्थनागीतं मालपति)

भोजः-भोः भोः! समागता स्सभासदः! धन्यवादा युष्माकं यतोऽद्य भवन्तः सर्वेऽपि अस्मदीय माह्वानमुपलभ्य समागताः । एतच्चमे परमानन्दं जनयति । भवतु! प्रकृतमनुसरामः । ह्यः महामत्यानां सूचना मनुसृत्य अद्य एषा नवरत्नमण्डिता सभा संस्थापिता । मन्येऽहं च भवन्त स्सर्वेऽपि सभा-

प्रारम्भाय सोत्कण्ठा इति। अतस्सभा समारभ्यते! अस्यां च महाकविभ्यः समस्यादिकं दीयते। तेऽपि स्वस्व प्रतिभादिकं पूरणेष्वेव प्रकटयेयुः। अतः श्रद्धया भवद्भिः श्रोतव्यमित्यभ्यर्थ्यते। (कार्यक्रमपत्रिकां दृष्ट्वा)

प्रथमं "प्रभातवर्णनम्"

भवः– (उत्थाय) महाराज! अवधीयताम्!

विरलविरलाः स्थूलास्ताराः कलाविव सज्जनाः,
मन इव मुने स्सर्वत्रैव प्रसन्न मभून्नभः।
अपसरति च ध्वान्तं चित्तात्सतामिव दूरतः,
व्रजति च निशा क्षिप्रं लक्ष्मीरनुद्यमिनामिव॥

भोजः–साधु! भवभूते! सम्यगुपमितं त्वया!

काळिः-महाराज! इदमप्यवधार्यताम्!

अभूत्पिङ्गा प्राची रसपतिरिव प्राश्य कनकं,
गतच्छायश्चन्द्रः बुधजन इव ग्राम्यसदसि।
क्षणात् क्षीणाः ताराः नृपतय इवानुद्यमपराः,
न दीपा राजन्ते विनयरहितानामिव गुणाः॥

भोजः–अहो! औपम्यं काळिदासस्य!

माघः–भोजभूपते! शृणोतु भवान्!

कुमुदवनमपश्रि श्रीमदम्भोजषण्डं,
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः।
उदयमहिमरश्मिर्याति शीतांशुरस्तं,
बत विधिनिहतानां हा विचित्रो विपाकः॥

भोजः–महाकवे! माघ! सम्यक्समर्थितार्थान्तरन्यासेन! भवतु! अधुना एका समस्या दीयते — पठति "क्रियासिद्धि स्सत्त्वे भवति महतां नोपकरणे" मयूरकवे! त्वं प्रथमं पूरयेमाम्!

मयूरः–तथैव! महाराज! श्रूयताम्!

घटो जन्मस्थानं मृगपरिजनो भूर्जवसनो,
वने वासः कन्दादिकमशनमेवं विधगुणः ।
अगस्त्यःपाथोधिं यदकृतकराम्भोजकुहरे,
क्रियासिद्धिस्सत्त्वे भवति महतां नोपकरणे!!

सर्वेः– सम्यगुक्तम् !

भोजः–महाकवे दण्डिन्! त्वमपि ब्रूह्य!

दण्डीः–महाराज! अवधार्यताम्!

रथस्यैकं चक्रं भुजगयमिता स्सप्ततुरगाः,
निरालम्बोमार्गः चरणविकल स्सारथिरपि ।
रविर्यात्येवान्तं प्रतिदिनमपारस्य नभसः,
क्रियास्सिद्धिस्सत्त्वे भवति महतांनोपकरणे !!

भोजः–साधु! दण्डिन्! साधु महाकवे बाण! पूरयतु भवानपि!

बाणः–श्रूयताम्! महाराज!

विजेतव्या लङ्का चरणतरणीयो जलनिधिः,
विपक्षः पौलस्त्यः रणभुवि सहायाश्च कपयः ।
पदातिर्मर्त्योऽसौ सकलमवधीद्राक्षसकुलं,
क्रियासिद्धिः सत्त्वे भवति महतांनोपकरणे!

भोजः समीचीनम्!! (मल्लिनाथमालोक्य) सूरे! मल्लिनाथ! भवानपि पठतु!!

मल्लिः अवधार्यताम्! महाराज!

धनुः पौष्पं मौर्वी मधुकरमयी चञ्चलदृशां,
दृशां कोणो बाणः सुहृदपि जडात्मा हि मकरः।
स्वयं चैकोऽनङ्गः सकलभुवनं व्याकुलयति,
क्रियासिद्धिः सत्त्वे भवति महतां नोपकरणे!!

प्रतीः–(प्रविश्य) महाराज! अत्रत्यैः कविपण्डितप्रकाण्डैः प्रेषिता !!इयं चीटिका देवसन्निधिम्! (इति ददाति)

भोज–(तं दृष्ट्वा वाचयति) सर्वस्य द्वे; वृद्धो यूना; एको गोत्रे; स्त्री पुंवच्च। (प्रकाशं) भोः भोः! महाकवयः एतानि सूत्राणि पादादौ कृत्वा श्लोकं पूरयितु मभिलषन्ति सभासदः।

प्रथमं "सर्वस्य द्वे"

माघः–महाराज! श्रूयताम्!
सर्वस्य द्वे सुमति कुमती सम्पदापत्तिहेतू।

भोजः–(द्वितीयं पठति) वृद्धो यूना।

कालि-वृद्धोयूना सह परिचयात्त्यज्यते कामिनीभिः।

भोजः–(तृतीयं पठति) एको गोत्रे!

मयूरः-एकोगोत्रे प्रभवति पुमान् यः कुटुम्बं बिभर्ति।

[ अनुवर्तते ]

गतमासगैर्वाण्यां प्रदत्तायाः समस्यायाः

नाथाभ्यासे स्थिता रामां पातिव्रत्यायुधान्विताम् ।
सर्वांगसुन्दरीं दृष्ट्वा कामुको विमुखोऽभवेत् ॥

— आर्. गोपालन्ः, चित्तूरु

रामप्रव्राजनव्यग्रो निर्लज्जां दयितां नृपः ।
सर्वाङ्गसुन्दरीं दृष्ट्वा कामुको विमुखोऽभवेत् ॥

— सुभद्रा, तिरुच्चि

पुराऽहल्यां महेन्द्रोऽपि गौतमासक्तमानसाम् ।
सर्वाङ्गसुन्दरीं दृष्टवा कामुको विमुखोऽभवेत् ॥

— पि. एम्. पद्मनाभशर्मा, तञ्जावूर्

धर्ममूर्ति हि दुष्यन्तः गर्भिणीं स्वयमागताम् ।
सर्वाङ्गसुन्दरीं दृष्ट्वा कामको विमुखोऽभवेत् ॥

— मुळ्ळपूडि सुब्रह्मण्यशास्त्री, तेनालि

अज्ञातकुलशीलोऽसौ परदारेषु वाञ्छया ।
सर्वाङ्गसुन्दरीं दृष्ट्वा कामुको विमुखोऽभवेत् ॥

— ति. गो. अनन्तसुब्रह्मण्यम्, तिरुपति

धनापहरणोद्युक्तां स्वस्यैव द्रोहकारिणीम् ।
सर्वाङ्गसुन्दरीं दृष्ट्वा कामुको विमुखोऽभवेत् ॥

— ना. व. निगमान्तः, प्रोद्दुटूरु.

आपादचूडं सुभगे रङ्गेशे लग्नमानसः ।
सर्वाङ्गसुन्दरीं दृष्ट्वा कामुको विमुखोऽभवेत् ॥
म. शेषाद्रि अय्यंगार्यः, तिरुपति

कोऽनुरागवतीं नग्नां नवयौवनशालिनीम् ।
सर्वाङ्गसुन्दरीं दृष्ट्वा कामुको विमुखोऽभवेत् ॥
— ति. अ. सन्तानगोपालशर्मा, तिरुच्चि

को वा लावण्यभाक्कन्यां मोहिनीं हंसगामिनीम् ।
सर्वाङ्गसुन्दरीं दृष्ट्वा कामुको विमुखोऽभवेत् ॥
— के. सुधाकरः, आदवानि

पत्नीं भर्तृव्रतगतां पूतवंशसमुद्भवाम् ।
सर्वाङ्गसुन्दरीं दृष्ट्वा कामुको विमुखोऽभवेत् ॥
— के. वि. वेङ्कटेश्वररायः, विशाखपत्तनम्

प्रवरः श्रोत्रियो नूनं प्रमदां च वरूथिनीम् ।
सर्वाङ्गसुन्दरीं दृष्ट्वा कामुको विमुखोऽभवेत् ॥
एस्. बि. रघुनाथाचार्यः, तिरुपति

---

सूर्यस्तुतिः —

सूर्यश्चक्षुररोगतां प्रदिशताद्धे सूर्य! तेजोमणे!
सूर्यं पूजय भोस्तचेन विधिना सूर्येण खं राजते ।
सूर्यायार्घ्यमहं ददे प्रतिदिनं, सूर्याच्च वृष्टिर्भवेत,
सूर्यागमनेन बुध्यति जनः सूर्ये जगत्तिष्ठति ॥
— भंटिगटि श्री चन्द्रशेखरभट्टः, मद्रास्

# श्री गुरुपूजामहोत्सवः

— उपद्रष्टा वेंकटकृष्णार्यः, विजयवाडा ।

स्वस्तिश्री नलनामसंवत्सराषाढपूर्णिमायां रविवासरे (११-७-७६) प्रातःकाले स्थानिक श्री दुर्गा संस्कृतपाठशाला-शिशुविद्यामन्दिरयोः संयुक्ताध्वर्ये महता संरम्भेण प्रचलितः श्रीगुरुपूजामहोत्सवः शिशुविद्यामन्दिरप्राङ्गणे। सर्वे छात्राः उपाध्यायाः आहूतपुरप्रमुखाश्च उपस्थिताः। प्रभुत्वकला-शालायाः संस्कृताचार्यः श्रीमान् वेङ्कटरमणमूर्ति महोदयाः अध्यक्ष-स्थानमलंचक्रुः। गुरुस्थानालंकृतानां आगिरिपल्ली कलाशाला भूतपूर्वाध्यक्षमहोदयानां श्री खण्ड्रिग शेषावधानिमहाभागानां पाण्डित्यपरिचयः शिशुविद्यामन्दिर - संस्कृताध्यापकैः श्री नागभूषण शर्ममहोदयैः कृतः गुरुपदाधिष्ठित शेषावधानि महोदयानां सम्मानपूर्वकपूजा कृता। तैः पण्डितमहाभागैः बम्बई भारतीय-विद्याभवनद्वारा संचालित - सरल संस्कृतपरीक्षासु सर्वप्रथमो-त्तीर्णानां छात्राणां प्रमाणपत्रवितरणं कृतम्।

अध्यक्षमहोदयैः श्री रमणमूर्ति महाभागै रभिहितं यत् सर्वेषां-विषयाणां आधारभूता संस्कृतभाषा एव। अद्यतनासु पाठशालासु कलाशालासु बोध्यमानानि सर्वाणि भौतिक रासायनिकार्थिकादि-शास्त्राणि संस्कृतभाषायाः एव उत्पन्नानि। अतः पाश्चात्याः एतां गीर्वाणवाणीं अधीत्य सकलविज्ञानशास्त्रपारङ्गताः अभवन्। ततः ते अद्य खगोलशास्त्रं अधिकं वेत्तुं प्रयत्नं कुर्वन्ति। अस्मात् सर्वैः छात्रैः संस्कृतमवश्यं पठनीयमिति।

श्री खण्ड्रिग शेषात्रधानि महोदयैः कथितं यत् गुरुपूर्णिमातः चातुर्मास्यदीक्षा आरभ्यते । गुरुशिष्यसम्बन्धः दृढतरो भूत्वा देशस्यास्य प्रतिष्ठाहेतुः भूयात्, सर्वे छात्राः अधीत संस्कृतभाषाः अवश्यं भवेयु रिति ।

श्री दुर्गासंस्कृतपाठशाला कार्यदर्शी उपद्रष्टा श्री वेङ्कट-कृष्णय्या अवोचत् यत् संस्कृतभाषा मुक्तिप्रदा न तु भुक्तिप्रदा इति प्रवादः । अधुना लोकव्यवहारे स्वजीविकां यापयितुं पाश्चात्यविद्याभ्यासं सर्वे कुर्वन्तु नाम । किन्तु आध्यात्मिक ज्ञानाभिवृद्धयै मानसिकशान्तये च संस्कृतभाषा एव अवश्यं पठ-नीया भवति । ये पाश्चात्याः भौतिकत्वमाधारीकृत्य स्वदेश प्रगतिं सम्पादितवन्तः ते एव अद्य आध्यात्मिक सुखप्राप्तये संस्कृतभाषाप्राधान्यं विज्ञाय मुक्तिप्रदां एतां भाषां अभ्यस्यन्ति । अतः छात्रैः उद्योगिभिः कर्मकारैः एवमेव सर्वैरपि संस्कृतभाषा विरामसमये अवश्यं अभ्यसनीया; स्त्रीभिस्तु विशेषतः । चित्तूरु संस्कृतभाषा प्रचारिण्या सभया प्रचाल्यमानानां परिचय - अभिज्ञ - विचक्षण - समर्थ - कोविद परीक्षाणां सरलत्वं वैशिटचं च विज्ञाय सर्वैः ताभ्यः परीक्ष्याभ्यः पठनाय सन्नद्धैः भाव्यं इति ।

शिशुविद्यामन्दिरकार्यदर्शी - श्री कृष्णंशेट्टि नारायण महो-दयः प्रकटितवान् यत् अस्मत्पाठशालायां संस्कृतभाषाभ्यासः निर्बन्ध पाठ्यभागत्वेन स्वीकृतः । एवमेव सर्वासु पाठशालासु निर्बन्धपठनांशत्वेन कल्पने अवश्यं संस्कृतभाषा सर्वजनादरणीया भारतदेशे सर्वत्र व्याप्ता च भवेदिति ।

शिशुविद्यामन्दिरप्रधानोपाध्यायैः श्री डी. सुब्बारेड्डी महोदयैः वन्दनसमर्पणं कृतम् ।

# गान्धीकथा

बालगणपतिभट्टः, श्रीरङ्गपत्तनम् ।

"बापूमहोदय ! सम्पुटकस्यास्योपरि हस्ताक्षरकृपा भवतु । अत्र विश्वविख्यातानां "लायिड् जार्ज् 'क्लेमिको' प्रभृतीनां भिन्नभिन्नराष्ट्रनायकानां नामाक्षराः लसन्ति" इति गान्धीमहात्मानं सप्रश्रयमभ्यर्थयामास कश्चन वार्ताप्रेषकः अमेरिकाराष्ट्रीयः वेब्-मिलर् - अभिधानः महाशयः ।

तदानीं महात्माऽऽङ्गलदेशेषु, भारतीयां दुर्दशां प्रति शासक-वर्गेण साकं विचारविनिमयार्थं तत्र गत आसीत् ।

वार्ताप्रेषकस्याभ्यर्थनानुसारं तस्य हस्तात् सम्पुटकं गृहीत्वा तत्सन्निधानमपावृत्यापश्यत् ! तत्रासन् धूमवर्तिकाः। महात्मा-वदत् "अहो! इदं धूमवर्तिकानां करण्डकम्" इति ।

"किं तेन ?" इति सहसाब्रवीत् हस्ताक्षरग्रहकः ।

"नाहं धूमपानस्य समर्थकः । अये ! स्पष्टं भवान् जानाति मदीयं मतम् । अतः कथं वा मद्विरुद्धवस्तुनि मदीयं नाम कथं वा लिखेयम् ? इत्युक्त्वा पुनरब्रवीत्सः गान्धी "यदि भवता प्रतिज्ञायते अस्मिन् करण्डके कदाप्यायत्यां न वर्तिकाः स्थापया-मीति तर्हि अवश्यं मदीयं हस्ताक्षरं प्राप्नोषि" इति ।

गांधीमहाशयस्य हस्ताक्षरं प्रति नितरामासक्तः 'वेब्मिलर्' महाशयः तस्यादेशमन्वतिष्ठत्। धूमवर्तिकाकरण्डकं तत्तु महात्मनः नाम्ना शुशुभे।

तद्दिनादारभ्य भाजनं तत् धूमवर्तिकास्थाने 'सन्दर्शककर्गज-खण्डानां (Visiting cards) आश्रयमभूत्।

इयं तावत् महती घटना तेनैव वार्ताप्रेषकेण वेब्मिलर् महाशयेन लिखिते "(I found no peace)" इत्यभिधानके ग्रंथे स्पष्टमुल्लिखिताऽस्ति।

~~~~~~

## मनो-बोधः

बालगणपतिभट्टः, श्रीरङ्गपत्तनम्

रथ्यासु माऽट किल मानससारमेय,
शीघ्रं प्रयाहि भगवन्निलयाग्रदेशम्।
प्राप्नोषि मन्दिरमुखे भगवत्प्रसादम्,
वाञ्छानुकूलमतितुष्टिकरं हितञ्च॥ १

संसारवृक्षमधिरुह्य कटूनि भुक्त्वा,
व्यर्थं हि मानसकपे तुदसि प्रकामम्।
श्रीरामनाममधुराणि फलानि सन्ति,
प्रेम्णा वनौकसजनैः परिसेवितानि॥ २
~~~~~~

नित्यं गवां प्रणयने सुतरां प्रवृत्तः,
चिन्ताऽऽत्मनो न हि पुनश्च मनःककुद्मन् ।
दुःखं मुहुर्भवति तेऽशिववर्धनेन,
तस्मादये पशुपतेर्निकटं प्रयाहि ॥ ३

संसारघोरविपिने निजबर्हजालं,
विस्तार्य मानसमयूर कृतो हि नृत्यम् ।
कस्यापि तेन न च तुष्टिरहो विमूढ,
शीघ्रं समाश्रय शिवात्मजमात्मदेवम् ॥ ४

सन्तानपालनकृते मृगयन्नथत्वं,
विद्वेषिणो बलिभुजस्सदनं प्रयासि ।
तं मुञ्च पक्षिपपतेश्शरणं भजस्व,
तूर्णं मनःपरभृदाशु विचारशून्य ॥ ५

मोघोहि मानसमधुव्रत ! ते प्रयत्नः,
संसारघोरविपिने मधुसंग्रहार्थम् ।
शीघ्रं प्रयाहि रघुरामपदारविन्दे,
सीताकराम्बुरुहयुग्मसदाश्रिते च ॥ ६

बद्धश्च मानसशुकेह सुभुक्तिमुक्ती,
संसारपञ्जरगतो यदि वाञ्छसि त्वम् ।
श्रीरामरघुराम सुनामपङ्क्तिं,
उच्चैरुदीरियमुहुर्भवबन्धहन्त्रीम् ॥ ७

व्यर्थं भवद्भ्रमणमत्र मनश्चकोर,
संसारघोरविपिने भवदावतप्ते ।
आराममीहितमये रघुरामचन्द्र –
ज्योत्स्ना - सुरञ्जितमये भज ते सुखाय ॥ ८

# नवपर्वोदयः

— जयेशः, पुसद्

विदेशीयसहाय्येन कम्भितं प्रतिपक्षकैः ।
राष्ट्रीयसंकटं ज्ञातं चातुर्येण तथा यदा ।। १

रक्षणार्थं स्वराष्ट्रस्य आपत्कालः प्रघोषितः ।
तथा राष्ट्रविकासार्थं स्वयोजना पुरस्कृता।। २

भ्रष्टाचारं परामृष्टुं निर्मातुमनुशासनम् ।
निर्मातुं कार्यकौशल्यं दमयितुं च दुर्जनम्।। ३

अपहर्तुं च दारिद्रयं आर्थिकतत्वसंयुतः ।
एकविंशतिसूत्रेण कार्यक्रमः सुगुंफितः ।। ४

किमहो! महदाश्चर्यं द्रुतं गच्छति दुर्मतिः ।
सुमतिर्द्रुतमायाति तिरोहिता दारिद्रता ।। ५

प्रस्फुरितं च सौजन्यं स्फुरितमनुशासनम् ।
इन्दुमति र्द्युतिं याति प्रजाः यान्ति प्रसन्नताम्।। ६

# श्रीरामानुजाचार्यः

"अवरः"

[ पूर्वानुबन्धः ]

## १८. श्रीरामानुजविजयः —

श्रीरामानुजः यादवाद्रौ विष्णोर्देवालयनिर्माणे व्यग्रोऽभवत्। कतिपयैर्मासैः आलयनिर्माणं परिसमाप्तम् । तत्र रामप्रियविग्रहं प्रतिष्ठापयितु मभिलषति स्म रामानुजः । दिल्लीश्वरस्य पुत्र्याः समीपे स विग्रहोऽस्ति इति कर्णाकर्णि श्रुत्वा तमानेतुं रामानुजः दिल्लीश्वरसमीपमेव गतः । राजा विग्रहप्रदानाय रामानुजेन प्रार्थितः । सोऽपि पुत्री मनुनीय विग्रहं दापयितुं प्रायतत । किन्तु तत्पुत्री सर्वात्मना तद्विग्रहविश्लेषं नाऽसहत । अतः स स्वपत्न्याः स्वपुत्र्याः पार्श्वे विग्रहान्तरं निवेश्य तत्रत्यं रामप्रिय-विग्रहं श्रीरामानुजाय दत्वा तं सभाजयामास ।

प्राप्तोचितविग्रहः श्रीरामानुजः दिल्लीनगरात् यादवाद्रि माजगाम। देवालये विग्रहप्रतिष्ठापनमहोत्सवः महता समारोहेण सम्पन्नः । वेदगोष्ठी - प्रबन्धगोष्ठीभिस्साकं पाञ्चरात्रागम-विधानेन देवालये विग्रहप्रतिष्ठाऽऽराधनादिकं परिनिष्पन्नम् । श्रीरामानुजेन उपक्रान्तं महत्कार्यं सफल मासीत् । यादवाद्रौ देवालयनिर्माणेन तदनुसृत्य नगरी काचित् तत्र निर्मितप्रायाऽऽसीत् । तत्र प्रतिष्ठितो देवः सम्पत्कुमाराह्वयोऽभूत्। पुत्रनिर्विशेषप्रेम्णा श्रीरामानुजः सम्पत्कुमारस्य जनकः प्रख्यातः ।

वेदाद्रौ सम्पत्कुमारदेवप्रतिष्ठापनोत्सवे तिरुपतिनगरादपि बहवो वैष्णवा स्समागताः । ते चिदम्बरे गोविन्दराजस्वमिनो

देवालयस्य विध्वंसनं, कुलोत्तुंगस्य मरणं, वैष्णवानां कृते मत-स्वातन्त्र्यप्रकटनमित्यादिकं वृत्तान्तजातं श्रीरामानुजाय न्यवेदयन्। ततश्च तिरुपतिनगरं समेत्य चिदम्बरादानीतस्य श्रीगोविन्दराज-स्वामिनो विग्रहस्य प्रतिष्ठापनं कर्तव्यमिति प्रार्थयामासु स्ते रामानुजम् । तेभ्य एव कूरेशमहापूर्णयोः विषादवृत्तान्तं श्रुत्वा श्रीरामानुजो भृशं दुःखितः । तिरुपतिनगरं प्राप्तः श्रीरामानुजो नारायणवनराजानं यादवराय मुपेत्य गोविन्दराजस्वामिनो देवा-लयनिर्माणे प्रोत्साहयामास । सोऽपि नृपतिः रामानुजस्य सन्देशं साक्षाद्भगवदादेशं मत्वा तिरुपतिनगरे देवालयनिर्माणं कारयामास। निर्मिते देवालये श्रीरामानुजः गोविन्दराजस्वामिनो विग्रहं प्रतिष्ठापयामास। तिल्यानाम्न्याः देवनर्तक्याः साह्येन चिदम्बरा-त्समानीतत्वात् स्वामी "तिल्या गोविन्दराज" इति प्रख्यातः। तदालयश्च "तिल्या गोविन्दराजस्वामिदेवालय" इति प्रख्यापितः। एवंरीत्या तिल्याऽपि भगवन्नामसायुज्येन स्वनाम धन्याऽसीत् ।

तिरुमलतिरुपतिदेवस्थाने भगवत्कैङ्कर्यं समाप्य श्रीरामानुजः काञ्चीपुरं प्राप्तः। कुलोत्तुङ्गस्य मरणानन्तरं काञ्चीपुरं यथापूर्वं आसीत् । शैवीकृता वैष्णवास्तु निर्भय मन्तर्बहिश्च वैष्णवा एव भवितुं पारयन्ति स्म। बहोः कालादनन्तरं काञ्ची-पुरं समागतं श्रीरामानुजं शैवा वैष्णवाश्च सर्वे सम्भूय मतविद्वेष-रहितं सादरं स्वागतं प्रदाय सम्भावयामासुः । राजा विक्रम-चोलोऽपि सामात्यपरिवारः विनीतवेषेण रामानुजं द्रष्टुमागतः। श्रीरामानुजः हिरण्यकशिपोः पुत्रं प्रह्लादं विस्मारयन्तं विक्रम-चोलं आशीर्वादपुरस्सर मन्वग्रहीत् । राज्ञा धार्मिकेण प्रजानु-रञ्जकेन च भाव्यमिति चोलराज मुद्दिश्य ततः श्रीरङ्गं गन्तु मुद्युक्तः ।

श्रीरामानुजः काञ्चीपुरात् श्रीरङ्गमागच्छतीति वार्ता रङ्गनगरे सर्वत्र व्याप्ता। सर्वे जनाः सहस्रशः समाविष्टाः भगवद्रामानुजस्य स्वागत मर्पयितुम्। दाशरथिप्रमुखाः श्रीवैष्णवा नगरोपकण्ठे सर्वविधगौरवलाञ्छनैः साकं स्वागतं समर्पयितुं नगरोत्सवविधानेन श्रीरामानुजं नेतुं प्रतीक्षमाणाः सन्नद्धाश्चाऽसन्। गोविन्दमिश्रेण सह श्रीरामानुजः यदा श्रीरङ्गपुरसीमां प्राप्तः तदा छत्रचामरादिश्रीचिह्नैः सभाजितः। दाशरथिः स्वयं छत्रं दधार। गोविन्दमिश्रः तदनुजश्च उभयोः पार्श्वयोः स्थित्वा चामरकैङ्कर्यं कुर्वन्ता वास्ताम्। सर्वे जनाः स्वागतपुरस्सरं श्रीरामानुजस्य नगरवीथीयात्रोत्सवं महताऽऽनन्देन संभ्रमेण चाऽकार्षुः। अन्ते श्रीरामानुजः श्रीरङ्गनाथस्वामिनो देवालयं प्राविशत्। तत्र स्वामिनं साष्टाङ्गपातं प्रणम्य हर्षोत्फुल्लगात्र स्तस्थौ। सावकाशं भगवन्तं आपादचूड मनुभूय गृहीततीर्थ - शठारि - प्रसादः पश्चात्प्रतिनिवृत्तः श्रीरामानुजः आत्मानमेव कराभ्यामन्विष्यन्तं अन्धं कूरेश मद्राक्षीत्। दर्शनमात्रेण दुःखार्तः श्रीरामानुजः कूरेशं आत्मनः प्रियान्तरङ्गिकशिष्यं बाहुभ्यां परिष्वज्य सान्त्वयामास। बहुकालविश्लेषेण दुष्टदिष्टेन च वञ्चितयोः आत्मबन्ध्वोः गुरुशिष्ययोः पुनस्समागमः, न केवलं तयोः, अपितु समेषां जनानां नयनानन्दकर आसीत्। आनन्दाश्रुभिः स्तम्भितदर्शनानि तेषां नयनान्यासन्। भगवतः श्रीरङ्गनाथस्वामिनः परमकृपया सर्वे सन्तुष्टाः तदानीम्।

कूरेशः राजभटैः श्रीरङ्गे निरुद्धप्रवेशः तस्मिन् दिने सुन्दर पर्वतमगात्। तत्रैवाश्रमे जीवितं यापयति स्म। श्रीरामानुजस्य आगमनवार्तां श्रुत्वा आश्रमात्प्रतिनिवृत्य आचार्याय आत्मानं निवेदयितुकाम स्तस्थौ देवालये। दैवकृपया आचार्यैः प्रियशिष्यं

महता प्रेम्णा वात्सल्येन च परिष्वज्य आत्मसात्कृत्वाऽन्वग्रहीत् । कूरेशः आत्मानं धन्यं मन्यते स्म । श्रीरामानुजः कूरेशं तत्वत एव पवित्रीकृतवान् ।

श्रीरामानुजस्य दिव्याज्ञया श्रीरङ्गे आलयार्चनाविधानं क्रमबद्धमासीत । वेदगोष्ठीभि स्साकं दिव्यप्रबन्धगोष्ठीनिर्वहणं अप्युपक्रान्तम् । श्रीरामानुजस्य शिष्याः त्रीन् विग्रहान् तदीयान् प्रकल्प्य तदनुमत्या श्रीरङ्गे, श्रीपेरुंबुदूर्नामके तदीयजन्मस्थले (भूतपुर्यां) तिरुनारायणपुरे च (यादवाद्रौ) प्रतिष्ठापयामासु । श्रीरामानुजो विजयतेतमाम् ।

श्रीयामुनाचार्यस्य दर्शनमेव श्रीरामानुजदर्शनमासीत्। निज-परमाचार्यस्य मुख्याभिलाषं ब्रह्मसूत्र भाष्यप्रणयनं स्वयं पूरयामास श्रीरामानुजः । यामुनाचार्यप्रभृतिभि पूर्वाचार्यैः सम्भावितस्य विशिष्टाद्वैततत्त्वस्य स्वयं रूपकल्पन मकरोत्; तमेव सिद्धान्तं देशे सर्वत्र प्रबोध्य अविच्छिन्न परम्परया तत्तत्सम्प्रदायं प्रवर्तयितुं बहून् शिष्यान् - शिक्षयामास । दक्षिणापथे सर्वान वैष्णवा-लयान् संदर्श्य तेषां पुनरुद्धरणपुरस्सरं आराधनाविधानं संस्का-रयामास । दिव्यप्रबन्धगोष्ठीनां सर्वेषु वैष्णवालयेषु निर्वहणं नियत मकारयत् । वैष्णवसम्प्रदायप्रवर्तनाय बहून् मठान् स्थापयामास । चतुस्सप्ततिसिंहासनानि परिकल्प्य तेषु वैष्णव-सम्प्रदायनिष्ठागरिष्ठान् निपुणान् शिष्यान् नियोजयामास ।

[अनुवर्तते]

सुकविता यद्यस्ति राज्येन किम् ?

# कविताविनोदः—

(१३) समस्या ।

" सलिलादग्निरुत्थितः " ॥

★

उत्सुकै रेतां समस्यां सचमत्कारं पूरयित्वा एतन्मासान्तात् पूर्वमेव अधोविद्यमानचीटिकायां स्वसङ्केतादि यथासूचितं सविवरं विलिख्य, साकं प्रेषणीया । प्रेषितेषु रुचिरतया विद्यमानाः श्लोकाः आगामिन्यां गैर्वाण्यां प्रकटीकरिष्यन्ते ।

कविताविनोदाय

नाम –

सङ्केतः –

नगरं / ग्रामः -

पत्रालयः –

मण्डलम् –

प्रान्तः –

---

सम्पादकः, "गैर्वाणी" संस्कृतभाषाप्रचारिणी सभा, चित्तूरु (आ. प्र.) इति सङ्केताय प्रेषयन्तु ।

Please mention your membership Number for easy correspondence.

---

R. N. 1845/60. Postal C. T. R. 11.

आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-'65.

Licensed to Post without Prepayment. LICENCE No. 1

भारतसर्वकारेण पुरस्कृता च

# गैर्वाणी

वार्षिकम् ५-००

---

# प्रहेलिका

एकस्यैव हि शब्दस्य पुंस्त्रीरूपे परस्परम् ।
मिलिते मुखषट्कस्य वाहवक्त्रध्वनि स्मृतः ॥ केका:

---

Published by Sri N. Ramanatha Aiyar, B.A., B.L., Advocate & Secretary,
S. B. P. Sabha, Chittoor. (A. P.)
Printed by Sri K. V. Raghavan (in-charge)
at Vijaya Press, Chittoor. (A. P.) C. 1500